॥ शास्तृ पञ्चाक्षरस्तोत्रम् ॥

ॐ - ओङ्कारमूर्तिमार्तिघ्नं देवं हरिहरात्मजं ।
शबरीपीठनिलयं शास्तारं प्रणतोस्म्यहं ॥ १

न - नक्षत्रनाथवदनं नाथं त्रिभुवनावनं ।
नमिताशेषभुवनं शास्तारं प्रणतोस्म्यहं ॥ २

म - मन्मथायुतसौन्दर्यं महाभूतनिषेवितं ।
मृगयारसिकं शूरं शास्तारं प्रणतोस्म्यहं ॥ ३

शि - शिवप्रदायिनं भक्तदैवतं पाण्ड्यबालकं ।
शार्दूलदुग्धहर्तारं शास्तारं प्रणतोस्म्यहं ॥ ४

वा - वारणेन्द्र समारूढं विश्वत्राण परायणं ।
वेत्रोद्भासिकरांभोजं शास्तारं प्रणतोस्म्यहं ॥ ५

य - यक्षिण्यभिमतं पूर्णापुष्कला परिसेवितं ।
क्षिप्रप्रसादकं नित्यं शास्तारं प्रणतोस्म्यहं ॥ ६

श्री शास्तृ पञ्चाक्षरस्तोत्रं सम्पूर्णं ॥